# सांख्यतत्वकौमुदी

https://sa.wikisource.org/s/863

अजामेकां लोहितशुक्लकृष्णां
बह्वीः प्रजाः सृजमानां नमामः।
अजा ये तां जुषमाणां भजन्ते
जहत्येनां भुक्तभोगां नुमस्तान्।।
कपिलाय महामुनये मुनये शिष्याय तस्य चासुरये।
पञ्चशिखाय तथेश्वरकृष्णायैते नमस्यामः।।

इह खलु प्रतिपित्सितमर्थं प्रतिपादयन् प्रतिपादयिता अवधेयवचनो भवति प्रेक्षताम्। अप्रतिपित्सितमर्थं तु प्रतिपादयन् न अयं लौकिको नापि परीक्षक इति प्रेक्षावद्भिरुन्मत्तवदुपेक्ष्येत। (पञ्चमकारिकायाः भाष्यम् इतः परम्) तत्राप्तवचनमिति लक्ष्यनिर्देशः, परिशिष्टं लक्षणम्। आप्ता प्राप्ता युक्तेति यावत्। आप्ता चाऽसौ श्रुतिश्चेति आप्तश्रुतिः। श्रुतिः- वाक्यजनितं वाक्यार्थज्ञानम्। तच्च स्वतः प्रमाणम्। अपौरुषेयवेदवाक्यजनितत्वेन सकलदोषाशङ्काविनिर्मुक्तेर्युक्तं भवति।

आदिविदुषश्च कपिलस्य कल्पादौ कल्पान्तराधीतशुतिस्मरणसम्भवः, सुप्तप्रबुद्धस्येव पूर्वेद्युरवगतानामर्थानामपरेद्युः। तथा च आवट्यजैगीषव्यसंवादे भगवान् जैगीषव्यो दशमहाकल्पवर्त्तिजातजन्मस्मरणमात्मन उवाच- “दशसु महाकल्पेषु विपरिवर्तमानेनानभिभूतबुद्धिसत्त्वेन मया” इत्यादिना ग्रन्थसन्दर्भेण।

आप्तग्रहणेनाऽयुक्ताः शाक्यभिक्षुनिर्गन्थकसंसारमोचकादीनामागमाभासाः परिहृता भवन्ति। अयुक्तत्वं चैतेषां विगानात्, विच्छिन्नमूलत्वात् प्रमाणविरुद्धार्थाभिधानाच्च कैश्चिदेव म्लेच्छादिभिः पुरुषापसदैः पशुप्रायैः परिग्रहो बोद्धव्यम्। तु शब्देनाऽनुमानाद् व्यवच्छिनत्ति। वाक्यार्थो हि प्रमेयः, न तु तद्धर्मो वाक्यम्, येन तत्र लिङ्गं भवेत्। न च वाक्यं वाक्यार्थं बोधयत् सम्बन्धग्रहणमपेक्षते, अभिनवकविविरचितस्य वाक्यस्याऽदृष्टपूर्वस्याऽनुभूतचरवाक्यार्थबोधकत्वादिति।